भागमिन्द्राय एवंरूपाय दातुं प्रक्रान्तोऽशक्तः तस्मै ददामीति, एवं सर्वेषु कृतेषु शेषस्य साधारणत्वादगृह्यमाणविशेषं शेषकार्यं तन्त्रेण सकृत्कर्तव्यम् ऐन्द्रवायवे तु वचनात्प्रतिकर्मभक्षो न प्रधानभेदात् हेतुनिर्देशस्त्वर्थवाद मात्रम् ।

ऐन्द्रवायवग्रहे द्विः शेषभक्षणाधिकरणम् ।

**सू० ऐन्द्रवायवे तु वचनात्प्रतिकर्मभक्षः स्यात् ॥ ५ ॥**

ऐन्द्रवायवे तु किं सकृद्भक्षणं? उत द्विः? इति पूर्वपक्षस्य सकृदिति प्राप्ते वचनाद् द्विरिति सिद्धान्तः, सति वचने पूर्वपक्षासम्भवात्पूर्वाधिकरणे एव चोपवर्णनापरिहारार्थं सूत्रं नाधिकरणान्तरम् ।

सोमे शेषभक्षणाधिकरणम् ।

**सू० सोमेऽवचनाद्भक्षो न विद्यते ॥ ६ ॥**

सोमे च ग्रहाश्चमसाश्च पुरुषाश्च तत्र संशयः किं न क्वचित्कस्यचिद् भक्षणम्? उत सर्वत्र सर्वेषामविशेषेण भक्षः? उत यस्य यत्र प्रत्यक्षवचनं तस्य तत्र भक्षणम्? अथवा समाख्यानपठकाहोमाभिषव प्रत्यक्षवचनैर्भेद इति, वार्त्तिके तु सर्वत्र सर्वेषां भक्ष इति पक्षमतिमन्द त्वादनुपन्यस्य त्रयः पक्षा इत्युक्ताः, तदिदमतः प्रभृति होमाभिषवाभ्या चेत्यतमन्तमेकमधिकरणं तत्र "भक्षणं नास्ति सोमस्य निःशेषं हूयते यतः । शेषे सत्यपि नैवात्र भक्षणं विध्यभावतः" । सोमे हि यद् ग्रहान् स्थापयति चमस 'जुहोती'ति वचनात्सौत्रामणीवद्ध वसावीवत्कृत्स्न एव नास्ति कुतो भक्षणम्, सत्यं जुहोतीति वचनमस्त्यत्र सोमपात्राणामनुवादमात्र मिति मन्यते । यस्त्वपजिन्दु निपातमात्रेण शास्त्रार्थस्य कृतत्वात् अविषहोम इत्याह तस्य सौत्रामण्यादावपि तथैव स्यादुपांशु ले च बोद्धव्य शेष स्यात । अथ शेषकार्यवशाच्छिष्यते ततसिपामाप प्रयोजकत्वाच्छेषनाशो पापहारादावपि स्विष्टकृदादावपि हविरन्तरागम स्यात तस्मादशेषत्वाद भक्षणम । यद्यपि चात्र जुहोतीति वचनस्यानन्यार्थत्वात्कृत्स्न स्यात्तथाऽपि न भक्षो वचनाभावात पुरस्तादैन्द्रवायवं भक्षयति वषट्कर्तुः प्रथमभक्ष हवि र्धानेग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्च परेत्य सदसि भक्षान्

भक्षयन्ती'त्यादौ सर्वत्र गुणान्तरश्रवणात् तत्परो विधिर्न[1] भक्षं विधत्ते, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त इति लिप्सामात्रं श्रुतं न भक्षस्तस्मान्नास्ति भक्ष इति प्रथमपक्षः शेषस्यावद्वत्यहोमविधानाद्भन्त्येव तस्य चासति भक्षे विशेषविधान पुरस्तादैन्द्रवायव भक्षयतीत्यनुपपद्यमानं भक्ष गमयति, तच्च लिङ्गं स्थालीपुलाकवदविशेषेण भक्षं गमयतीति सर्वत्र सर्वेषां भक्ष इति द्वितीयपक्षः । स्यादेतद्यदि विशेषविधिरयम्, असत्यां तु भक्षण[2]प्राप्तौ विशेषविधिर्न घटत इति अयमेव विशिष्टभक्षविधिः, तस्माद्यत्रैन्द्रवायवादौ यस्याध्वर्य्वादेर्भक्षोपदेशस्तत्र तस्य भक्षो नातिप्रसज्यत इति तृतीयः पक्षः, सिद्धान्तस्तु सत्यमेतत् यथोपदेशं भक्ष इति पुरस्तादैन्द्रवायवस्येत्येवमादिभिस्तु भक्षोपदेशो येषु तेष्वेव भक्ष इति न ब्रूमहे कारणान्तरादेव भक्षप्राप्तेः पुरस्तादित्यादेस्तु विशेषमात्रपरत्वात् तच्च कारणान्तरमन्यत्राप्यस्ति, किं पुनः कारणान्तरं समाख्यावषट्कारहोमाभिख्या यथायथं प्रापकाः, हारियोजने तु वचनं तत्र चमसेषु तावत्समाख्यया चमसिनां भक्षः, होतृचमसादिसमाख्या वेदे प्रैतुहोतुश्चमस इति मन्त्रे पठिताः, सोमचमस इति लौकिकी समाख्या चमस इत्येषोऽदनार्थस्य चमेरौणादिकोऽधिकरणसाधनोऽसच्—प्रत्यय, तस्मादयं होत्रादिभिश्चमितव्यः सोमरस इति सिद्धश्चमसेषु चमसिनां भक्षः ॥

उद्गातृणां सह सुब्रह्मण्येन भक्षाधिकरणम् ।

सू० उद्गातृचमसमेकः श्रुतिसंयोगात् ॥ ७ ॥

सम्प्रति वषट्कारादिनिमित्तं भक्षणमनुक्त्वाऽधिकरणमसमाप्यैवान्तरसमाख्याभक्षप्रसङ्गमेवानुसरति, तत्रैव मन्त्रे "उद्गातृणां चमस" इति श्रूयते तत्रोद्गातृचमसमुद्गाता एको भक्षयेत् प्रातिपदिकार्थविरोधिनो बहुत्वस्य श्रवणस्याप्यवलम्बनादिति प्रथमः पक्षः, एकः पक्षे चतुर्णस्य भक्षणेऽप्यन्यासम्भवादिह तु लक्षणयाऽर्थपरत्वे सम्भवति न वचनस्यात्यन्तबाधनं युक्तं

[1] न भक्षमिति तु पा० ।
[2] भक्षणप्राप्तौ इति पा० ।

स्वाद्वषट्कारादेर्होमेष्वपि सावकाशत्वात्प्रतिपत्तेश्चैकेनैव लक्षणेन सिद्धेः चमसिनामेव चमसेषु भक्ष इति पूर्वः पक्षः । वाचनिकयोर्वषट्कारहोमाभिषवयोः समाख्यया बाधायोगात्तस्याश्च निरवकाशत्वेन ताभ्यां बाधासम्भवाद्वषट्कारस्य सर्वभक्षे प्रतिपत्तिसम्भवे ऽन्यतरस्यापि बाधो न युक्त इति समुच्चय एवेति सिद्धान्तः ॥

होतुः प्रथमभक्षाधिकरणम् ।

सू० एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ १२ ॥

सिद्धे ऽनेकेषां भक्षणे क्रमश्चिन्त्यते । किमध्वर्युः पूर्वं भक्षयेदुत वषट्कर्तेति तत्राध्वर्युहस्ते पात्रस्यावस्थानात्स तावद्भक्षयेत् । ततो वषट्कर्ता चमसिनः पश्चात् । वषट्कर्तुः प्रथमभक्ष इति भक्षपरं न प्राथम्यमपि विधत्ते वाक्यभेदात् । अथवाऽध्वर्योः प्राथम्यस्य न्यायतः स्थितत्वान्न तद्बाधनं युक्तं वषट्कर्तुश्चमसिना चानवगतः क्रम आकाङ्क्षित इति तद्विषयमिदं वचनं वषट्कर्तुश्चमसिभ्यः प्रथमं भक्ष इति नाध्वर्य्वपेक्षिततया, तस्मादध्वर्योः प्रथमभक्ष इति प्राप्ते ब्रूमः । "वचनस्याविशेषेण प्रवृत्तेर्न्यायमात्रेण सङ्कोचायोगाद्विशिष्टविधानाच्च वाक्यभेदाभावात् । "होता ते वनः प्रथमपाहो’ति मन्त्रवर्णात्कारणभूतस्य वषट्कारस्य च प्राथम्यात्तन्निमित्तभक्षः प्रथमं कर्त्तव्यम् । ये तु वचनाभावेऽपि कारणप्राथम्यादेव वषट्कर्तुः प्रथमभक्षणं भवतीति प्रतिपादयितुमिदमधिकरणम् । वचनोपन्यासस्तु कृत्वा चिन्तोद्घाटनार्थमित्याहुः । तेषां स्वव्यवहारविरोधः—तार्तीय क्रमोऽभिधेयोऽविधेयश्चेति विभज्य व्यवहरन्ति । अत एवासौ तृतीये चिन्त्यते इत्याहुः । अत्रैवाधिकारेण क्रमचिन्ता । वषट्काराच्च भक्षयेदित्यत्र वषट्कारो भक्षनिमित्तमित्युक्तं न क्रमः । स त्विहैव चिन्त्यते । स चेद्वचनबलादुत न्यायादेव चिन्त्यते सोऽप्यनभिधेयः पाञ्चमिकश्च विधेयश्च स्यादिति सिद्धान्तहानिः, पञ्चमे वाऽसौ चिन्त्यः स्यात् । प्रसङ्गादिह चिन्त्यते । युष्माकमिहेति चेत्तर्हि ते मैव ब्रूहि विधेयत्वादसौ तृतीये चिन्त्यत इति पञ्चमिकाद्विशेषाभिधानं प्रलापः । किञ्च यदि वचनादिति सूत्रं कृत्वा चिन्तोद्घाटनार्थं तर्हि तदधिकरणं समाप्य कर्त्तव्यम् इदं तु कारणानुपूर्व्यादिति

सूत्रात्प्रागेव कृतमिति न कृत्वा चिन्तोद्घाटनं युज्यते । यदि न्यायादेव प्राथम्यं लभ्यते ततोऽवचनमेवेदं न्यायानुवादमात्रत्वात्तच्च वचनादिति सूत्रानुपपत्तिः । न च शक्यमिदं न्यायाल्लब्धुं यदा वषट्कारः न तदा भक्षणं कर्त्तव्यम् अहुतस्य भक्षणाप्रभवात् होमे तु कृते तन्निमित्तकमिदमपि भक्षणं तदुपस्थित[1]मेवेति न विशेषः प्रत्युत वषट्कारनिमित्तमुपस्थानं अष्टहोमनिमित्तं त्वप्रष्टम् इति तदेव प्रथमं कृत्वा पश्चादन्यत्कर्त्तव्यम् । वक्ष्यति हि सहालम्भे सवनीयमुपाकृत्य पश्चादग्नीषोमीयोपाकरणमिति । तस्माद्वचनादेव प्राथम्यं वषट्कर्तुः । अभ्युच्चयमात्रं तु कारणानुपूर्व्यम्

भक्षस्यानुज्ञापूर्वकत्वाधिकरणम् ।

सू॰ वचनादनुज्ञातभक्षणम् ॥ १३ ॥

नानुपहूतेन सोम पात इत्यत्रोपहूतशब्देनानुज्ञानमुच्यत इति दर्शयितुमुत्तरचिन्तार्थं चैतत्सूत्रम् ॥ तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् । अनुज्ञाप्य भक्षयितव्यं वचनादिति स्थितं तल्लौकिकेन शब्देन मन्त्रेण वेति । उपहूत उपह्वयस्वेति लिङ्गवन्मन्त्राम्नानात्तेनैव कर्त्तव्यमिति इदमपि प्राप्तसूत्रमेव ॥

वैदिकव्याख्यानप्रतिवचनाधिकरणम् ।

सू॰ तत्रार्थात्प्रतिवचनम् ॥ १४ ॥

"उपहूत उपह्वयस्वे"ति मन्त्रः स किं समस्त एवानुज्ञानानुज्ञापनयोः अन्यतरत्र प्रयोक्तव्य इतरत्र लौकिकः शब्दः उत? उभयत्रापि समस्तः ? किं वा विभज्य यथायथमिति, । तत्रानुज्ञापनपूर्वकत्वादनुज्ञाया मन्त्राशयोश्च तद्विपरीतत्वाच्च विभज्य विनियोगः । तस्मात्समस्तोऽयमन्यतरत्रोभयत्र वेति प्राप्ते ब्रूमः । लिङ्गेन वाक्यं बाधित्वा विभाग एव मन्त्रयोः । तत्रापि पाठक्रमम् अर्थक्रमेण बाधित्वा पश्चात्पठितोऽप्युपह्वयस्वेति पूर्वभाविन्यनुज्ञापने पाठ्यः । पूर्वपठितोऽप्युपहूत-शब्दः पश्चात्तनाया[2]मनुज्ञायाम् ॥

एकपात्राणामनुज्ञापनाधिकरणम् ।

सू॰ तदेकपात्राणां समवायात् ॥ १५ ॥

१ तदुपस्थितमेवेति पा० ।

२ पश्चात्तनायामनुज्ञायामिति पाठः सर्व यद्यपि सर्वपुस्तकेषु दृश्यते तथापि पश्चात्तन्यामनुज्ञायामित्येव युक्तः पाठ इति नागराक्षरपरीक्षणानाम् ।

प्रकरणाच्च सोमभक्षो न लक्षणान्तरम्। स च यागद्रव्यसंस्कारत्वेन निर्ज्ञातस्तत्सम्बन्धित्वेन च श्रूयमाणं फलमसेऽन्यथा तत्सम्बन्धायोगाद्यजमानचमसयागाभ्याससाधनत्वं प्रतिपद्यते। तदेव भक्षसम्बन्धकथनव्याजेन तद्द्वाराऽवगतयागसम्बन्धित्वेन विधीयते। तद्विधौ च भक्षसम्बन्धः प्राप्त एवानूद्यते तस्मादिज्याविकारत्वम्। एतेनाभिषवयुक्तपूतीकानां याग साधनत्वं व्याख्यातम्॥

ब्राह्मणानामेव राजन्यत्र भक्षानुपसर्पणाधिकरणम्।

सू० अनुप्रसर्पिषु सामान्यात्॥ १८॥

राजसूये दशपेयः सोमविकारः तत्र राज्ञोऽधिकारः। ज्योतिष्टोमाच्च तत्र दश चमसाः प्राप्ताः। तेषु यजमानचमसस्य यज्ञेन लक्षणा प्राप्त तत्रेदं श्रूयते 'दश दशैकैकं चमसमनुप्रसर्पेयुः। शतं ब्राह्मणाः सोमान्भक्षयन्ती'ति तत्र संशयः। किं यजमानचमसं राजन्या दश भक्षयेयुः? उत ब्राह्मणाः? इति, तदर्थं च किं दश दशेति विधिः, शतं ब्राह्मणा इत्यनुवादः?। उतायमपि विधिः? इति। तत्रानुप्रसर्पेयुरिति विधिश्रवणात्तावत् चमसे दशसंख्या विधीयते। तथा संख्यामात्रं प्राकृतं निवर्तते, जातिस्तु प्राकृतैव[२] तिष्ठते तत्रारुणैकहायनीन्यायेन जातिसंख्ययोर्मिथो नियमे सति ब्राह्मणचमसेषु ब्राह्मणा दश राजन्यचमसेषु राजन्या दश भवन्तीति शतं ब्राह्मणा भक्षयन्तीति वर्तमानापदेशात्प्रवशिष्टशतस्यानुवादः। भूम्ना च ब्राह्मणा ब्राह्मणेषु ब्राह्मण-शब्दः[१]। अनुवादाच्च लक्षणाऽपि न दुष्यति। तस्माद्यजमानचमसं राजानो दश भक्षयेयुरिति। "उच्यते विधिरेवायमर्थवत्त्वात् श्रुतेस्तथा। अन्यथा वचनं व्यर्थं लक्षणा च प्रसज्यते॥" न हि कृत्स्नानुवादस्य किंचिदस्ति प्रयोजनम्। सम्भवन्त्यां श्रुतौ नैव लक्षणाऽप्युपयुज्यते। तस्माच्छतानुवादेन ब्राह्मण्यमिह चोद्यते। तत्र च न्यायतः प्राप्ता राजजातिर्निवर्तते। स्यात्पञ्चमलकारेण विधिरत्र समिदादिवत्। ब्राह्मणानामतो भक्षो राजन्यचमसे स्थितः॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य पञ्चमः पादः॥ ५॥

१ सिमिनी-मुकुपमुख्यते।
२ प्राकृत्येवावतिष्ठत इति पुस्त. पाठः।

तदुपहूतानं किं सर्वेषां पुरुषाणामुतैकपात्राणा[१]मेवेति । अथ शेषा-त्सर्वेषाम् इति प्राप्ते ब्रूमः ॥ दृष्टार्थमनुज्ञापनमलौके भागाधिक्यं च मर्षयितु तच्चैकपात्राणामेवेति तेषामेवानुज्ञापनम् ॥ [१]

स्वय वषट्कर्तुर्भक्षास्ति तार्थाधिकरणम् ।

**सू० याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ १६ ॥**

होतृप्रवचनाम्नातायाज्याः समाख्यया होतुः प्राप्तास्तत्र कांश्चिद्धोतुरपनीय यजमानस्य विधीयन्ते । तस्यापनीयमानाया किं वषट्कारस्तदपनीयते? उत नो होतर्येवावतिष्ठते याज्यामात्रं त्वपनीयत इति संशयः । तत्र । यजमानस्य याज्येति याज्यापनयचोदना । वषट्कारस्तु याज्यातो भिन्नत्वान्नापनीयते । याज्याया अधि वषट्करोतीति याज्यातो वषट्कारस्य भिन्नत्वाच्च तदपनयने ऽपनयः । यद्यपि स्वयं वा निषद्य यजतीति यष्टृत्वं यजमानस्योक्तं तदपि याज्यामात्रप्रयोगादेवोपपन्नम् अतस्तेन प्रयुक्ताया याज्याया अधिहोमे नैव वषट्कुर्यात्तन्निमित्तश्च भक्षस्तस्मै वेति । प्राप्ते ब्रूमः । यष्टृत्वं यजमानस्य प्रत्यक्षवचनाच्छ्रुतम् । परिपूर्णं च यष्टृत्वं वषट्कारेण जायते । याज्यामात्रप्रयोगे तु न्यूनं तच्च न युज्यते । अनयोश्च यष्टृत्वं याज्यामात्रं ब्रूपयतो । अतोऽन्यो यजमानो ऽतो वषट्कुर्यात्स एव नः । भक्षोऽपि यजमानस्य वषट्कारनिमित्तकः ॥

फलचमसस्य इज्याविकारताधिकरणम् ।

**सू० फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ १७ ॥**

"यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति राजन्यवैश्यनिमित्तेन सोमविकारः फलचमसः, स तु किं भक्षमात्रे सोमं विकुर्यात्? उत याज्यायामपीति संशयः । तत्र बिभक्षयिषेदित्युपक्रमाद्भक्षं प्रयच्छेदिति चोपसंहारात्तत्रैव विकारो नेज्यायामित्येवं प्राप्ते ब्रूमः । यागार्थद्रव्यसंस्काररूपभक्षणसंस्कृतेः । स्तिभिनीचमसो यागे द्रव्यमित्यभिधास्यते । यदि सोमं बिभक्षयिषेदिति सोमभक्षमनुत्कीर्त्य तत्र फलचमसो विधीयते

१ मनुकीर्त्यैतनु पा० ।

प्रकरणाच्च सोमभक्षो न लक्षान्तरम् । स च यागद्रव्यसंस्कारत्वेन निर्ज्ञात-स्तत्सम्बन्धित्वेन च श्रूयमाणः फलमसोऽन्यथा तत्सम्बन्धायोगाद्यजमान-चमसयागाभ्याससाधनत्वं प्रतिपद्यते । तदेव भक्षसम्बन्धकथनव्याजेन तद्द्वाराऽवगतयागसम्बन्धित्वेन विधीयते । तद्विधौ च भक्षसम्बन्धः प्राप्त-एवानूद्यते तस्मादित्याविकारत्वम् । एतेनाभिषवग्रहणपूतीकानां, याग-साधनत्वं व्याख्यातम् ॥

ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम् ।

## सू० ऋत्विक्प्रसर्पिषु सामान्यात् ॥ १८ ॥

राजसूये दशपेय सोमविकारः तत्र राज्ञोऽधिकारः । ज्योतिष्टो-माच्च तत्र दश चमसाः प्राप्ताः । तेषु यजमानचमसस्य यज्ञो लक्षणं प्राप्त तत्रेदं श्रूयते 'दश दशैकैकं चमसमनुप्रसर्पेयुः । शतं ब्राह्मणाः सोमान्भक्ष-यन्ती''ति तत्र संशयः । किं यजमानचमसं राजन्या दश भक्षयेयुः? उत ब्राह्मणाः? इति, तदर्थं च किं दश दशेति विधिः, शतं ब्राह्मणा इत्यनुवादः? । उतोभयमपि विधिः? रिति । तत्रानुप्रसर्पेयुरिति विधिश्रवणात्प्रति चमसं दश-संख्या विधीयते । तया संख्यामात्रं प्राकृतं निवर्तते, जातिस्तु प्राकृतैवा[2]व तिष्ठते तत्रारुणैकहायनीन्यायेन जातिसंख्ययोर्नियमे नियमे सति ब्राह्मण चमसेषु ब्राह्मणा दश राजन्यचमसेषु राजन्या दश भवन्तीति शतं ब्राह्मणा-भक्षयन्तीति वर्तमानापदेशात्प्रचर्याशिष्टशतसंख्यानुवादः । भूम्ना च ब्राह्म-णा ब्राह्मणेषु ब्राह्मण-शब्दः । अनुवादाच्च लक्षणाऽपि न दुष्यति । तस्माद्य-जमानचमसं राजानो दश भक्षयेयुरिति । "उच्यते विधिर्वाक्यमर्थत्वात् भूते-स्तथा । अन्यथा वचनं व्यर्थं लक्षणा च प्रसज्यते[1] ॥ न हि कृत्स्नानुवादस्य किंचिदस्ति प्रयोजनम् । सम्भवन्त्यां श्रुतौ नैव लक्षणा ऽप्युपयुज्यते । तस्मा-च्छतानुवादेन ब्राह्मण्यमिह चोद्यते । तत्र च न्यायतः प्राप्ता राजजाति-र्निवर्तते । स्यात्पञ्चमलकारेण विधिश्च समिदादिवत् । ब्राह्मणानामतो भक्षो राजन्यचमसे स्थितः ॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य पञ्चमः पादः ॥ ५ ॥

१ जैमिनी-मुकुन्दमुच्यते ।
२ प्राकृत्येवावतिष्ठत इति मुक्तः पाठः ।

## अथ तृतीयेऽध्याये षष्ठः पाद आरभ्यते ।

अथ स्रुवादिषु खादिरतादिविधेः प्रकृतिगामिताधिकरणम् ।

**सू० सर्वार्थमप्रकरणात् ॥ १ ॥**

अनारभ्य विधानप्रसङ्गागतं शेषविषयं विचारं समाप्येदानीं तमेवानारभ्यवादमनुसरति । "यस्य खादिरः स्रुवो भवति यस्य पर्णमयी जुहूर्भवतीत्यनारभ्य जुह्वाद्युद्देशेन विधीयमानाः पर्णतादयो जुह्वादीनां क्रत्वव्यभिचारात्तद्द्वारेण क्रत्वर्थता इति स्थिते चिन्त्यते । किं प्रकृतिविकृति-साधारणं विधानम् ? उत प्रकृतावेवेति । तत्र 'जुह्वादिप्राप्तिमात्रं हि पर्णतादेरपेक्षितम् । या चोपदेशिकी प्राप्तिर्या चातिदेशिकी । सर्वा सा प्राप्तिरूपेण तुल्या तदनुपादानतः । विधीयमानं पर्णत्वं सर्वार्थमिति गम्यते । ननु येनातिदेशेन विकृतौ प्राप्यते जुहूः । तेनैव पर्णताऽपीति व्यर्थं तदुप-देशनम् । नैवं प्रत्यक्षसिद्धत्वात्पर्णत्वस्यानुमानतः । चोदकात्प्राप्यते तस्मात्सर्वेषां पर्णतादयः ॥ नैव द्विरुक्तिदोषः स्यात्प्राप्तत्वाद्धि पुनर्विधेः । पृथक्त्वेन पदार्थानां भवत्येवोदकस्ततः । तदुक्त्वा[1] युज्यते प्राप्तिः प्रकारस्त्वतिदिश्यते । पदार्थानां खलु प्राप्तिस्तद्विशेषणभावतः । समुल्लिखितावते सर्वे प्रकृतौ तद्विशेषणम् । तेन यावज्जुह्वादिर्विकृतौ तावत्तैव च प्राप्तैव पर्णताऽपीति व्यर्थस्तस्य पुनर्विधिः । अवश्यं च जुहूप्राप्तिः प्रतीक्ष्या पर्णताविधौ । तथा सत्येव पर्णत्वं प्राप्तं न तु विधीयते प्रकृतावेव पर्णत्वविधिस्तेन व्यवस्थितः ॥

सामिधेनीषु प्रकरणसंख्याया विकृतिगामिताधिकरणम् ।

**सू० प्रकरणविशेषात्तु विकृतौ विरोधि[2] स्यात् ॥ २ ॥**

सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्य श्रुतं साप्तदश्यं किं प्रकृतावुत विकृताविति संशयः, तद्रूपे च हि प्राकरणिकेन पाञ्चदश्येन तुल्य

---

१ तदुक्तप्रयुक्ते इति पा० ।

२ विरोधित्वादिति तु पा० ।

सत्र? श्रुत लिङ्गादिभिरिति तत्र द्वयोरपि वाक्यप्रयोगाविशेषात्तुल्यबलतां मन्यते, न च प्रकरणे न कश्चिद्विशेषः "वाक्यानुग्रहं यस्मात्तस्मात्प्रकृतिगामिता। पूर्ववत्साप्तदश्यस्य तथा प्राप्ते ऽभिधीयते॥ सामिधेनीस्वरूपेण सम्बन्धो वाक्यतो भवेत् । तन्मात्रसङ्गते चैते मंत्रे स्यातामनर्थके। अपूर्वसाधनत्वांशे लक्षिते सद्भिरर्थेन तल्लक्षणाविरोधश्च शीघ्रं प्रकरणाद् भवेत् ॥ प्रकरणे विधीयमानस्य सर्वस्य प्रकृतापूर्वसाधनत्वं स्वरसत इति पाञ्चदश्यमपि तत्रैव विधीयमानं तादर्थ्येन विधातव्यमिति गम्यते तादर्थ्यं च तत्साधनरूपसम्बन्धे घटते न सामिधेनीस्वरूपसम्बन्ध इति स्वरूपातिक्रमेण साधनरूपलक्षणा तत्र लभ्यते, साप्तदश्यस्य तु रूपमात्रं गम्यते नापूर्वार्थत्वं, स्वरूपस्य च सामिधेनीस्वरूपेणापि संबन्धो घटत इति नान्वयोपपत्तये लक्षणा, किं तु विधीयमानस्य साप्तदश्यस्यानर्थक्यपरिहाराय प्रतिपन्नक्रतुसम्बन्धसामिधेनीलिङ्गवशाद्विपरिवर्तमानमेव क्रत्वपूर्वं कथंचित् हृदयमागमय्य तादर्थ्यसिद्ध्यर्थं तत्साधनलक्षणाऽऽश्रयणीयेति क्रतुसम्बन्धविप्रकर्षाद्दौर्बल्यम् । अतः पूर्वनिविष्टपाञ्चदश्यबद्धत्वात्तेनैव निराकाङ्क्षा प्रकृतिमलभमानं साप्तदश्यं विकृतिषु निवेक्ष्यते, तत्रापि न सर्वासु किं तु श्रुतसाप्तदश्यासु मित्रविन्दादिष्वेवेति दशमे वक्ष्यते ॥

गोदोहनादीनां प्रकृतिगामिताऽधिकरणम् ।

सू० नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥ ३ ॥

सप्तदश वैश्यस्येति यदि वैश्यनिमित्तेन[1] नैमित्तिकं साप्तदश्यं विधीयते तत्प्रकृतौ वा स्यादुत विकृताविति प्रकृतेः पाञ्चदश्यावरोधात्पूर्ववद्विकृतिपूत्कर्षे द्वयोर्वा प्रकरणाधीतत्वक्रत्वर्थत्वाच्च विकल्पे प्राप्ते ऽभिधीयते, नैमित्तिकं प्रकृतावेव नित्यं पाञ्चदश्यं विकल्प्य निविशते तुल्यप्रकरणत्वात्तत्रोत्कर्षं तावद्वक्ष्यति "प्रकृतौ निविशेतानस्तत्रापि न विकल्प्यते। पाञ्चदश्येन किं त्वस्य बाधकत्वेन वर्तते

१ यद्वैश्यनिमित्तेनेति पा०।

यत्वे प्रणयनादिद्वारतुल्यतयाऽस्ति विरोधः, ततश्च क्रत्वर्थस्य तस्मिन्प्रयोगे बाधः प्रयोगान्तरे त्ववाधवस्याप्यते, सामान्येन हि स श्रुतः पशुकामप्रणयनप्रयोगे तु वाक्यान्तरगतश्चमसः सन्निधिमात्रेण सम्बध्यते गोदोहनं तु तत्रैव वाक्ये श्रुतमिति बलीयः, तदुक्त 'पशुकामप्रयोगे तु क्रमेण चमसाङ्गता । श्रोताद्गोदोहनात्तत्र चमसस्य निराक्रिये' ति बाधितत्वादेव न तदानीं चमसादेरङ्गत्वमवघातादेरिव कृष्णलादौ, अतस्तल्लोपेऽपि नास्ति वैगुण्यं येन क्रियाफलविनाशस्तद्वयाच्च प्रणयनाभ्यासः स्यात् 'गुणहानिर्हि वैगुण्यं न चास्य गुणता तदा । गोदोहनं च न गुणः क्रतोः कामाय चोदनात् । किं तु प्रणयनं द्रव्यहीनमङ्गं क्रतोस्तदा काम्यनैमित्तिके तस्मात्प्रकृतौ नित्यबाधके" ॥

आधानस्य पवमानेष्ट्यङ्गताऽधिकरणम् ।　सू० इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ४ ॥

आधानपवमानेष्टयश्च मिथः सन्निहिता समाम्नाताः, तत्र किमाधानमिष्ट्यङ्गं ? मुत ने ? ति तत्र प्रकरणादङ्गत्वम् । ननु फलवत्सन्निधावफलं तदङ्गं न चेष्टयः फलवत्य आधानं सफलमग्निनिष्पादकतया ऽतो न विपरीतमङ्गाङ्गित्व, सत्यमेवं पूर्वपक्षवादी मन्यते आनयोऽतिदेशेनेष्ट्यङ्गम् आधानं चाग्निसंस्कारकमवगम्यमान प्रकरणादिष्ट्यङ्गभूताग्नीनां संस्कारकमवगम्यमानं प्रकरणादिष्ट्यङ्गभूताग्निसंस्कारकतयाऽवघातादिवदिष्ट्यर्थम्, इष्टीनां तु विश्वजिदादिन्यायेन फलकल्पना भविष्यतीति, सिद्धान्तस्तु फलवदग्निहोत्राद्यर्थत्वादग्नयः फलवन्तः तदर्थं चाधानं श्रुतिसंयोगात्, इष्टयोऽपि प्राकरणिकेन वाक्येन फलवदाद्यङ्ग प्रकरणाद्वाऽऽधानस्यैव फलवतोऽङ्गं विज्ञायमाना न कल्प्यफला भवितुमर्हन्ति विनैव कल्पनया सर्वैर्वामर्थवत्त्वात् । यत्त्वातिदेशिकमग्नीनामिष्ट्यङ्गत्वं तदौपदेशिकेनेष्टीनामग्न्यङ्गत्वेनाधानाङ्गत्वेन वा विरुध्यमानं बाध्यत इति वक्ष्यते, तस्मादिष्ट्यर्थमाधानम्, अनारभ्यवादप्रस्तावादाधानवाक्यस्यानारभ्यवादत्वमेवावस्थितम् ।

आधानस्य सर्वार्थताऽधिकरणम् ।　सू० तत्प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः ॥ ५ ॥

स्थितेऽनारभ्याधानस्येमं प्रत्येतद्विचार्यते, "किमाधानं-प्रकृत्यर्थमग्निमात्रार्थमेव वा। तत्र सर्वार्थत्वोपायाभावात्प्रकृतिगामिता ॥ उच्यते श्रुतिसंयोगादाधानस्याग्निशेषता। प्रसिद्धक्रतुशेषत्वं प्रकरणादुपादिश्यते। पर्णत्वमन्यथा द्वैधीभावित्यादिनीह तु। न कस्यचित्क्रतोः श्रुतमिह श्रुत्याग्निभावतः वाक्यलक्षणया स्याच्चेदानारभ्यत्वादुपपत्तितः ॥ स्यादेतत् यथाऽनारभ्याधीतमपि पर्णमयीत्वं जुहूस्वरूपपरत्वे सत्यानर्थक्यात्क्रतुसाधनानि लक्षणया विधीयमानं वाक्यादेव क्रत्वर्थं भवति एवमाधानमपीति, नैवं जुह्वादयो ह्याकृतिविशेषा विनापि पर्णमयीत्वेन तदाकारसम्भवात्तत्स्वरूपार्थत्वे विध्यानर्थक्यादुक्ता तत्र साधनलक्षणा, इह त्वाहवनीयादिस्वरूपस्याधानादृतेऽनुत्पत्तेस्तत्स्वरूपार्थत्वेऽपि विध्यानर्थक्याभावात् साधनलक्षणया क्रत्वर्थत्वं युक्तमिति विशेषः। एतेन पवमानेष्टीनामप्यक्रत्वर्थत्वं व्याख्यातम्।

पवमानेष्टीनामप्रकृते-
ग्नौ कर्तव्यताधिकरणम्।

सू० तासामग्निः प्रकृतितः प्रयाजवत् ॥ ६ ॥

प्रासङ्गिकमिदं पवमानेष्टिषु किं पवमानेष्टयः कर्तव्या? नेति "तत्र प्रकृतितस्तासु पवमानेष्टिष्वकृत। यद्वाग्निः सर्वार्थः कार्यः पवमानेष्टयोऽपि ताः ॥ ननु यावदर्थामाप्तासामग्न्या. कार्यास्तासामग्न्या इत्यनवस्थापत्तिः स्यात् "उच्यते नैव दोषोऽस्ति यावदर्थं व्यवस्थिते। यावतोः प्रकृतस्तु तस्मिन् वहति तावतोः ॥ कुर्वतो नाऽग्न्यभावः स्यादिति पार्थेऽभिधीयते। न तावदतिदेशेन प्राप्तिस्तासामनुष्ठात। न हि ताः प्रकृतेरुत्पत्तिमार्गेण दर्शितम्। प्रकृतिवाञ्छाया यत्कयाभावेन सद्गुत तदेव चोदना लिङ्गादिकृतावकाशिदिश्यते ॥ चोदकेन ततस्तासां तासु प्राप्तिर्न विद्यते। यद्यप्यपि स्यात्ता नातिदेशोऽवकल्पते विधीयन्ते यदा ता न प्रकृतौ सन्ति तास्तदा। यदा हि पवमानेष्टयो विधीयमानाः कथंभावाविशेषः प्रकृतिमालोचयन्ति तदा प्रकृतिस्तच्छून्यत्वात्तासां तदपन्ने यदीतुमिति तदनिरिक्तामिष्टेनिराकाङ्क्षता एतेभ्यः समुदाय पवमानेष्टयो न पुन

१ पर्यवस्यन इति पा।

रात्मानमपि गृह्णन्ति । यत्तूक्तमग्निप्राप्तिरर्थतस्तासामपि प्राप्तिरिति अत्रोच्यते, सत्यं, प्राप्यन्तेऽग्नयस्तु त्वदभिप्रायाद्भाव्यन्ते ते हीष्टीनां साध्यभूताः कथमिव तासां साधनीभवेयुः । नन्वत एवाग्न्यर्थमन्याः क्रियन्ते तत्साधितैरवाग्निभिरन्या इष्टयः कारिष्यन्ते इत्युक्तं, न सर्वथा तावत्प्रथमद्वाश्चद्विष्टयोऽग्निभ्यो कर्तव्या ताभिश्च किमग्नयो जायन्ते न वा? यदि नेत्याह किमर्थं ताः क्रियन्ते । अथ जायन्ते सिद्धोऽयं नान्याः कर्तव्याः आन्यर्थ्यमेव हि ताः क्रियन्ते नैव[1] सिद्धा इति नान्याभिः प्रयोजनं, तस्माच्च पवमानेष्टिषु पवमानेष्टयः कर्तव्याः ॥

उपाकरणादीनामग्नीषोमीयधर्मताधिकरणम् ।

सू० तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ ७ ॥

एवं प्रकरणस्य पूर्वैः सह विरोधविचारं सप्रासङ्गिकं समाप्याधुना स्थानस्य पूर्वैः सह विरोधाविरोधौ विचार्येते, पादान्तेन प्रकृतिविकृतीनां समानासमानविधानत्वं विचारितम्, अत्रापि तदेवानुवर्तते ज्योतिष्टोमे त्रयः पशवः तत्राग्नीषोमीयः क्रयप्रविधानुत्पत्तो वचनादौपवसथ्येऽहन्यनुष्ठीयते, तस्मिन्नेवाहनि सवनीयाम्नानमाग्नेयः पशुरग्निष्टोम इत्यादि, तत्रैव पशुधर्मा यूपच्छेदादयः पठिताः, सौत्येऽहनि पुनः सवनीयाम्नानम् आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति, अनुबन्ध्यस्त्ववभृथान्ते समाम्नातः, तदिह विचार्यते, किमेते धर्मास्त्रयाणामपि पशूनां साधारण्येन विधीयन्ते? किं वा सवनीयस्यैव? अथाग्नीषोमीयसवनीययोः? उताग्नीषोमीयस्य? वेति तदर्थं च किमग्नीषोमीयस्य स्थानं ज्योतिष्टोमिकेन प्रकरणेन सवनीयाद्यन्तःप्रकरणेन वा विरुध्यते, नेति तत्सिद्ध्यर्थं च किं सवनीयानामौपवसथ्येऽह्नि प्रकरणमस्ति न वास्तीति चिन्तनीयं, ततोऽप्येतद्विवेक्यं किमौपवसथ्येऽह्नि सवनीयोत्पत्तिः? उत सौत्येऽहनीति तत्र प्रकरणाज्ज्योतिष्टोमगृहीता धर्मास्तदङ्गेषु पशुषु विज्ञाय-

---

१ ते च सिद्धा इति पा० ।

यत्र गुणार्थेन श्रवणं तत्र विद्यते। तस्मात् सवनीयस्य प्रक्रिया गुणमविधेः पश्वौपवसथ्यवाक्ये गुणो नास्तीत्युक्तम्, अस्ति प्रचारविप्रकर्षः आग्नेयः पशुरित्याद्यनुक्रान्त्य यथा वै मत्स्य इत्यादिना निन्दित्वा तत्परिहाररूपेण वपया प्रातः सवने चरन्तीत्यादिना प्रचारविप्रकर्षो विधीयते, शक्यते च सौत्येऽप्युत्पन्न कर्मानूद्य प्रचारविप्रकर्षो विधातुमुपादेयत्वात्, सुत्यावाक्ये तु कालो गुणः, न चासावनुपादेयत्वादौपवसथ्यात्पश्वरूपस्याविपरिवर्तमानकर्मानुवादेन विधातुं शक्यत इति तत्र तावत्कर्मोत्पत्तिर्विधातव्या। नन्वौपवसथ्येऽप्युत्पन्नं कर्मप्रचारोत्कर्षादुत्कृष्टं प्रातःसवने विपरिवर्तेत इति शक्यत एव कालविधिः, नैव ये हि वपाप्रचारात्प्रत्यञ्च पदार्थास्तेषामेव तदा द्विराभिसम्बन्धादिति न्यायेनोत्कर्षः स्यात्, अपूर्वत्वाद्वा तेषामपि न स्यात्, उपाकरणादीनां तु प्राचां पदार्थानां नास्त्येवोत्कर्षः, तस्मादुपाकरणस्य प्रातःसवने विपरिवृत्त्यभावात् तस्य कालविधिः सम्भवतीत्युत्पत्तिविधिरेवायम् इतरस्तु गुणविधिरिति प्रकरणाभावाच्च सवनीयार्थत्वं स्थानात् त्वग्नीषोमीयार्थत्वम्। यत्तु महाप्रकरणेन स्थानं बाधित्वा ज्योतिष्टोमगृहीताः सर्वपशूनामित्युक्तं, तत्रोच्यते पशुधर्मा हि पशुयागमाकाङ्क्षन्ति, ज्योतिष्टोमस्तु सोमयागो न पशुधर्मान् गृह्णाति यदि न कश्चिदपि पशुधर्मान् ग्रहीतुं शक्नुयात् ततो *गत्यभावाज्ज्योतिष्टोमगृहीताः सन्तस्तत्रानर्थक्यात्* तदङ्गेष्ववतरेयुः, शक्नोति च स्थानादग्नीषोमीयो ग्रहीतुमिति तदङ्गं धर्माः न सर्वपाशवी, नापि सवनीयस्य, नोभयोः, अग्नीषोमीय एवातो विधेर्धर्मा व्यवस्थिता अन्यत्र त्वतिदेशेन गच्छन्ति न विधानतः। विधिस्तु दैव एवेति सूत्रे विधिरुदाहृतः॥

शाखाहरणादीनामुभय-
*दोहधर्मताधिकरणम्।*

सू॰ दोहयोः कालभेदादसंयुक्तं
शृतं स्यात्॥ ८॥

दर्शपूर्णमासयोः सायं दोहः पूर्वेद्युः प्रातर्दोहश्चापरेद्युः दोहधर्माः शाखाहरणादयः पूर्वेद्युः क्रियन्ते ते किं सायं दोहार्थाः? उतोभयार्थाः? इति सन्देहे पूर्ववदनुष्ठानसादेश्यादवान्तरप्रकरणाद्वा सायंदोहार्था इति प्राप्ते

ऽभिधीयते प्रकरणाविशेषादुभयार्थो, न हि स्थानं प्रकरणस्येष्टे, न च दधिग्रहस्यावान्तरप्रकरणमत्रास्ति, न च स्थानमपि प्रधानस्य विद्यते सत्यापरेष्ट्युत्तरकालानुष्ठानात्, दधिग्रहयोस्तु केचिद्धर्माः पूर्वेद्युः क्रियन्ते, न च तदर्थाः शाखाहरणादयः प्रधानार्थत्वात्, तस्मादुभयार्थो दोहधर्माः।

सादनादीनां सवनत्रयधर्मताधिकरणम्।

सू० तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ९ ॥

ज्योतिष्टोमे प्रातःसवनसम्बन्धिनो ग्रहधर्माः समाम्नाताः उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुव'' इत्यादयः ते किं प्रातःसवनिकग्रहार्था उत प्राकरणिकसर्वग्रहार्थाः? इति विचारे पूर्वत्र स्थानमपि नास्तीत्युक्तम् इह त्वस्ति सन्निधिः स्थानमिति विशेषाशङ्कायां प्रकरणाविशेषात्तु सर्वार्था इति सिद्धान्तः।

रशनात्रिवृत्त्वादीनां सर्वयूपधर्मताधिकरणम्।

सू० रशना च लिङ्गदर्शनात् ॥ १० ॥

अग्नीषोमीये यूपपरिव्याणे विहिते परिव्ययत्यूर्ग्वै रशनेति सवनीये पुनः परिव्याणान्तरं विहितम् आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति, परिव्याणसाधनभूता रशनातद्धर्मास्त्वाग्नीषोमीयक्रमे विहिताः त्रिवृद्दर्भमयी भवति पार्श्वतो कर्तव्येत्यादयस्ते किमग्नीषोमीयपरिव्याणार्थाः? उत सवनीयपरिव्याणार्था? अपीति संशये, तत्र क्रमादग्नीषोमीयार्था इति प्राप्ते ब्रूमः "अत्यैतद्यूपसम्बन्धिपरिव्याणाङ्गतादृताः। नाग्नीषोमीयधर्माः स्युस्तादर्थ्यत्वात सवनीयपरिव्याणमप्येतद्रूपसङ्गतम्। तस्मात्तत्रापि रशना सह धर्मैः प्रपत्स्यते॥ इति.

अंश्वदाभ्ययोरपि सादनादिधर्मवत्त्वाधिकरणम्।

सू० आराच्छिष्टमसंयुक्तमितरैः सन्निधानात् ॥ ११ ॥

अत्र यद्यपि प्रासङ्गिकी कथा, तथापि सङ्गतिः स्पष्टैव, ग्रहधर्माणां साधारण्यं पूर्वमुक्तं, ते किमनारभ्याधीतयोरंश्वदाभ्ययोरपि भवन्त्युत प्राकरणिकानामेव? इति संशये, 'तत्र प्रकरणाद्विते तद्वतिग्रहमात्रगाः। नानारभ्य समाम्नाता ग्रहार्थाः स्युरसन्निधेः।' उच्यते "ग्रहाणां प्रक्रिया नास्ति यया धर्मव्यवस्थितिः।

१ समाम्नातग्रहार्था इति।

नापि प्रकरणं तेषां विशेषण¹तयेष्यते ॥ न ये सोमप्रकरणगतास्तेषाममी धर्मा इति किं तु यज्ञे प्रकरणं तेन प्रकृतेन विशेषणात् । धर्मास्तत्साधनानां हि यज्ञाणां शेषतामियुः, ये चानारभ्य विहिता ये च प्रकरणे यज्ञाः । सर्वे तत्साधनत्वात्तद्धर्मसम्बन्धमाप्नुयुः ।

चित्रिण्याद्यिष्टकानामङ्गताधिकरणम् ।

सू॰ अग्न्यङ्गमप्रकरणे तद्वत् ॥ १२ ॥

अग्निप्रकरणे समाम्नाता इष्टकाधर्मा अखण्डाम् अकृष्णामित्यादयः, किं प्राकरणिकीनामेवेष्टकानाम्? उताऽनारभ्याधीतानामपि चित्रिणीरुपदधातीत्येवमादीनाम्, पूर्ववदेव संशयपूर्वोत्तरपक्षौ पूर्वत्रांश्वदाभ्ययोरनारभ्योक्तयोरपि प्राकरणिकेन वाक्येन विनियोगोऽस्तीति प्रकरणसम्पर्शाद्युक्तो धर्मसम्बन्धः, चित्रिण्यादीनां तु विनियोगोऽप्यनारभ्यवादेनैवेति प्रकरणसम्पर्शाभावाच्च तद्धर्मसम्बन्ध इति विशेषाशङ्का, प्रकरणसम्पर्शाभावेऽपि प्रकृतापूर्वसम्पर्शात्तत्साधनविशेषिणो धर्मास्तासामपि भवन्तीति सिद्धान्तः ॥

मानोपावहरणादीनां सोममात्रधर्मताधिकरणम् ।

सू॰ नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ १३ ॥

ज्योतिष्टोमे राजन्यवैश्यनिमित्तेन फलचमसश्चोदितः स चेज्याविकार इति स्थितं, मन्त्राभिषवादिसंस्कारास्ते किं नैमित्तिकस्यापि फलचमसस्य समाना? उत नित्यस्यैव सोमचमसस्य नैमित्तिके तु तद्विकार इति विचार्यते तत्र "अपूर्वसाधनत्वाच्च संस्कारविधयो यतः । तस्मान्नैमित्तिकेऽपि स्युः साधनत्वाविशेषतः" । सोममभिषुणोतीत्ययमर्थः अभिषुतेन यजेतेति, फलचमसेनापि चेज्यते, अतस्तस्याप्यभिषव उपदिष्ट एव भवति, "तेन व्रीहियवा नित्याः समानविधयो यथा । नित्यनैमित्तिके द्रव्ये समानविधिनौ तथा" उच्यते साधनेनैव नित्यसंस्कारसङ्गतिः । सरूपेण त्वसंयुक्ता न विरूपेण युज्यते" संस्कारा हि निमित्तयोगाभावात्क्रतोः स्वाभाविकाङ्गत्वेन विधीयमानास्तदनुरूपमेव द्वारमाश्रयन्ति व्रीहियवौ यथा अपि प्राप्तिरूपेण क्रतो

¹ विशेषेण तयेष्यते इति पा० ।

नित्या एवेति धर्मविधेर्वैरूप्याच्छक्नुवन्ति द्वारतामुपगन्तुं यद्यप्युपगमरूपेणानित्यत्वं तद्व्रीहीणामपि तुल्यमेवेति नित्यद्वाराभावादगत्याऽप्रधानाङ्गानामनित्यद्वारत्वमपि युक्तम्। आम्नानस्वरूपेण च नित्यत्वाद्व्रीहिवद्विध्यार्नित्यवदाम्नातसंस्कारविध्येकवाक्यस्य शास्त्ररूपसमानत्वात् युज्यते, शक्यते हि वक्तुमवहन्ति व्रीहिभिर्यवैर्वा यजेतेति, फलचमसस्तु निमित्तसंयोगादाम्नानेनैवानित्य कथं नित्यै यावत्क्रतुभाविभिरभिषवादिभिरेकवाक्यतामुपेयात् विहृतु खल्वेतदभिषवेण नित्यं ज्योतिष्टोमम् उपकुर्यादनित्यफलचमसद्वारमिति तथा नित्येन फलचमसेन नित्यक्रत्वर्थाभिषवसंस्कृतेन यजेतेति यद्यभिषुतेन फलचमसेनेत्युच्यते, ततः फलचमसोऽपि नित्याभिषवद्वारमिति नित्यः स्यात्, सोमस्याम्नानतः प्रयोगत[1]श्चानित्य, राजन्यवैश्ययोरपि यजमानच[2]मसादेव सोमो निवर्तते अन्यत्र तु सोमः स्थित एव, तस्मात्तन्नैवाभिषवादिविधिः। अपि च नित्यं नैमित्तिकं च न युगपद्विधीयते किं तु नित्यं विधाय पश्चान्नैमित्तिकं विधेयं, तद्धि निमित्ते सति क्रतोर्विशेषरूपेण चोद्यते निमित्ते स्वेतद्रूपः क्रतुरिति, एवं च स्वारसिकरूपे प्राक् सिद्धे शक्यते वक्तुं, तस्माद् यस्यां वेलायां क्रतोः स्वाभाविकं नित्याङ्गं विधीयते तस्यामेव संस्कारविधयः तद्विशेषणत्वेन स्वार्थं विधाय निवृत्तव्यापारा न भूयः शक्नुवन्ति नैमित्तिकेनापि सम्बन्धुम् आवृत्तिप्रसङ्गात्। तस्मान्नित्यार्था धर्मा, नैमित्तिकस्य त्वतिदेशेन भविष्यन्ति ॥

प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणम्।

सू० प्रतिनिधिश्च तद्वत् ॥ १४ ॥

मुख्याभावे प्रतिनिधिर्वक्ष्यते स किं मुख्येन समानविधानो नेति मुख्याभावनिमित्तत्वात्पूर्ववदसमानविधो प्राप्ते उच्यते, स्यादेव यदि द्रव्यान्तरमिह यागस्य साधनत्वेनोपादीयेत व्रीहियवावस्त्विह सकलासम्भवाद्विकला उपादीयन्ते, नीवारगतास्तदनुषङ्गादवर्जनीयतया नीवारोपादान न साधनतया, साधनत्वे प्रमाणाभावात्। व्रीहयश्च व्रीहिगता इव नीवारगता अपि संस्कारविध्यन्विता एवेति समानविधानता ॥

---

१ प्रयोगश्च नित्य इति पा०।
२ राजन्यचमसादेवेति पा०।

श्रुतेऽपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ।

**सू॰ नियमार्था गुणश्रुतिः ॥ १५ ॥**

अथ यत्र श्रुतः प्रतिनिधिः यथा यदि सोमं न विन्देत पूतीकान[1] भिषुणुयादिति तत्र वचनेन पूतिकानामेव साधनत्वं विधीयते, न नीवारवद्रसाधनत्वम्, अतो द्रव्यान्तरमिदं सोमाभावे निमित्ते तत्साधनतापन्नं फलचमसवदसमानविधानं, नैवं न ह्यत्र पूतिका यागसाधनत्वेन विधीयन्ते सोमाभावे पूतिकैर्यागं कुर्यादिति, किं तर्हि सोमावयवोपलक्षणतया प्रतिनिधिनियमो ह्ययं, तेन सोमाभावे पूतीकैर्यागं कुर्यादिति नाभावे विधिरिति वक्ष्यते तदेषा वचनव्यक्तिः यत्सफलसोमावयवाभावे विकल्पावयवानुपाददीत तत्पूतिकागतानिति, तस्मादत्रापि सोमावयवानामेव तत्साधनत्वात्पूर्ववत्समानविधानत्वम् ।

दीक्षणीयादिधर्माणाम् अग्निष्टोमादृताधिकरणम् ।

**सू॰ संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ १६ ॥**

नैमित्तिकं क्रत्वर्थं नित्येन समानविधानं न भवति, नैमित्तिकस्यानित्यत्वात्तद्द्वारेण धर्माणां नित्यवत्क्रत्वर्थत्वानुपपत्तेरित्युक्तम्, इह काम्या गुणाश्चिन्त्यन्ते किमाश्रयभूतया क्रियया समानविधानाः उतासमानविधानास्तद्विकारा इति, तत्र काम्यस्य फलवत्त्वात्क्रतुवदेव स्वयमितिकर्तव्यतायाश्चित्वाच्च तद्द्वारेण क्रत्वर्थत्वमङ्गानां, येन नैमित्तिकवद्विरोधः स्यात्, अतो न गतार्थमिदं संस्थापदस्य च प्रदर्शनार्थम् । अन्योऽपि द्वादशाहादिरुदाहर्तव्यः, ज्योतिष्टोमस्य चतस्रः संस्थाः अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, इति अग्निष्टोमस्यैव विधान्तरमत्यग्निष्टोम इति अत्र षोडशिग्रहणमत्यग्निष्टोमे राजन्यस्य गृह्णीयादिति वाजपेयश्च षोडशिन एव भेदः, आप्तोर्यामश्चातिरात्रस्य एतदभिप्राय सप्त सोमसंस्था इति स्मरणं, तत्राग्निष्टोमस्य संस्था क्रत्वर्थो फलोऽस्तु फलं ज्योतिष्टोमेन स्वर्गकाम इति उक्थ्यादयः[2] संस्था ज्योतिष्टोमाश्रिता. फले विधीयन्ते "पशुकाम

[1] पुतीकान् इति पा॰ ।
[2] उक्थ्यादय इति पा॰ ।

उक्थ्यं गृह्णीयात्' "षोडशिना वीर्यकामः स्तुवीत" "अतिरात्रेण प्रजाकामो याजयेत्" इति । ननु यज्ञक्रतूनामत्र फले विधानं न संस्थायाः, उच्यते उक्थ्यशब्दोऽयं स्तोत्रविशेषवचनस्तत्सम्बन्धाद् यज्ञ उपचर्यते, न चैषोपचारोऽयथा युक्तः समाप्तौ च स्तोत्रसम्बन्धिन्यां वाचक एव तत्संस्थाविशिष्टे[१] क्रतौ प्रयोगादुक्थ्यो यज्ञ इति तत्र चाकृत्यधिकरणन्यायाद्विशेषणभूता संस्थैवाभिधेया स्तोत्रसम्बन्धात्समाप्तावपि लक्षणेति चेत् न तत्सम्बन्धिक्रतुमात्रे प्रयोगाभावात्, अस्ति हि षोडशिसंस्थे यज्ञे अतिरात्रसंस्थे चोक्थ्यसंज्ञस्तोत्रं, न च तत्र यज्ञे उक्थ्यशब्दप्रयोगः, तस्मात् संस्थायामेव प्रयुज्येत तत्संस्थ एव प्रयोगादभिधेयैव संस्था, सैवात्र फलाय चोद्यते पशुकाम उक्थ्यं गृह्णीयात् उक्थ्यात्मिकां संस्थां कुर्यादित्यर्थः, यज्ञस्तु फलवत्संस्थाप्रसङ्गत्वेन वाक्यान्तरप्राप्तमनूद्यते, एवं षोडशि-शब्दस्यापि स्तोत्रवचनत्वं संस्थावचनत्वं च व्याख्येयं तत्र लिङ्गव्यवस्था-यदा समाप्तिवचनः तदाप्यसतो निवृत्तामाश्रित्य पुंल्लिङ्गः । स्तोत्रवचनस्तु नपुंसकः फलवाक्ये च पुंल्लिङ्गः षोडशि-शब्दो वाक्यशेषादवगम्यत इति संस्थैव फले चोद्यते, स्तोत्रं तु पूर्ववदनूद्यते अतिरात्र इति तु रात्रिमतीत्य यः संतिष्ठते यज्ञः स उच्यते तत्र सत्यपि संस्थाविशिष्टयज्ञवचनत्वे विशेष्यस्य यज्ञस्य प्राप्तत्वादप्राप्ता संस्थैव विधीयते विधेयस्य च फलमिति संस्थैव फले साधनम् । एतदिह विचार्यते किं दीक्षणीयाद्यङ्गविधानं ज्योतिष्टोमस्य संस्थानां च समानम्? उत ज्योतिष्टोमस्यैवेति, तत्र 'तुल्यप्रकरणत्वेन सर्वेषां फलवत्त्वतः । तुल्यमङ्गविधानं स्यात्' इति प्राप्तेऽभिधीयते । विकल्पमङ्गवाक्यानां यद्यप्युभयान्वये । सम्भवत्येकरूपत्वे नानारूपं न युज्यते । न च क्रतुमनादृत्य संस्थाभिर्घटतेऽन्वयः । संस्थाऽवधारणेनैव युज्यते क्रतुसङ्गतिः । संस्था ह्यक्रियात्मकत्वाद्द्रव्यादिवदाश्रयभूतां क्रियामपेक्ष्य फलं साधयति, साधननिवेशि चाङ्गजातं तस्माद्यदा संस्थाभिः सम्बन्धुं प्रस्थितं तदा तत्साधनत्वनिर्वाहिका क्रियापि सैव द्रष्टव्ये

१ तत्संस्थाविशिष्टे इति पा ।

सा च स्वयमपि फलवत्त्वात्सत्यार्थमपि प्रस्थितमङ्गजातं किमिति न गृह्णाति तस्मात्सत्यासम्बन्धवाद्विनोऽप्यवर्जनीयः क्रतुसम्बन्ध इति न केवलमस्या र्थत्वं क्रतुस्तु स्वयमेव फलसाधनत्वादनाङ्गत्वेन सत्या शक्नोत्यङ्गजातमात्मसात्कर्तुमिति तदर्थमङ्गविधानं[1] न सत्यार्थम्, अत एव प्रमाणविशेषत्वादुभयार्थमित्यपि न शक्यं वक्तुं विशेषग्रहणात्, एवमपि सत्यार्थत्वं किं न भवति वैरूप्यादिति ब्रूमः, अङ्गविधयो हि न स्वार्थमात्रे पर्यवस्यन्ति आनर्थक्यप्रसङ्गात्, प्रयोगवाक्ये तु विशेषणत्वेन स्वार्थं समर्पयन्ति तेन नित्यानित्यप्रयोगद्वयानुसारेण नित्यवदनित्यवच्च स्वार्थं बोधयन्तस्तात्पर्यभेदाद्भिद्येरन्, यो ज्योतिष्टोमेन फलं कुर्यात्स एव यश्च ज्योतिष्टोमे कदाचित्स्यात्फलार्थी स एवमिति । किं च गुणः फलाय चोद्यमानः पूर्वप्राप्तप्रयुक्तां क्रियामाश्रित्य पश्चाच्चोद्यते यथा युक्ता च क्रिया प्रयुज्यते, तत्र प्राक्तनक्रिया प्रयुज्यते तत्र प्राक्तनक्रियाविधिसमये व्यापृतानामङ्गविधीनां पश्चात्तनेऽपि गुणफलविधौ व्याप्रियमाणानां विरम्य व्यापारः प्रसज्यते, अथ चापरोऽत्र विशेषः सोमस्तावच्छ्रुत्या यागार्थस्तत्संस्कारार्थश्च क्रयाभिषवग्रहणादयस्तद्द्वारत्वाद्यागार्था एव न सत्याभिः सम्बध्येरन्, सर्वं च प्रकरणं सोमसंस्कारविधिमिश्रमिति तैरसम्बन्धिपदैर्विच्छिन्नं सत्यानां प्रकरणं न दीक्षणीयादिकमप्यङ्गमलं ग्रहीतुं तस्मादसमानविधाना सत्याः ॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य षष्ठः पादः ॥ ६ ॥



१ तदर्थमङ्गजातमिति ।

## तृतीयाध्यायस्य सप्तमः पाद आरभ्यते ॥

बर्हिरादीनां दर्शपौर्णमा सतदङ्गोभयाङ्गताऽधिकरणम्। सू० प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥१॥

समानासमानविधप्रसङ्गाद्वाक्यप्रकरणविरोधाविरोधविचारेण दर्शपूर्णमासयोर्वेद्यां हवींष्यासादयति वेदिं खनति बर्हिषि हवींष्यासादयति बर्हिर्लुनातीति श्रुता वेदिबर्हिर्धर्माः किमङ्गप्रधानहविषां साधारणा? उत प्रधानहविषामेवे?ति चिन्त्यते, तत्र वाक्यस्वातन्त्र्ये सत्यानर्थक्यात्क्रत्वन्तरे चातिप्रसङ्गादवश्यं प्रकरणेनैकवाक्यत्वमपेक्षितव्यं प्रकरणं च प्रधानस्यैवेति प्रधानहविषामेव वेद्याद्यङ्गं न प्रयाजादिहविषामिति प्राप्ते ब्रूमः, सत्य, प्रकृतैकवाक्यत्वं तत्तु व्यवच्छेदकतया[1] वाक्यस्यात्यन्तसङ्कोचप्रसङ्गात्, प्रधानगृहीता हि वेदिस्तदर्थेष्वेव हविःषु स्यात्, तत्र वाक्यस्यात्यन्तसङ्कोचः स्यात्, तस्माच्चाय वाक्यार्थः प्रधानार्थं हविरासादनद्वारेण प्रधानापूर्वं वेद्या कुर्यादिति, किं तर्हि दर्शपूर्णमासोपकारिहविस्तद्वेद्यामिति, एष हि नातिसङ्कोचः कृतः स्यात्, न चानर्थक्यम्, अङ्गहविरपि च प्रधानस्योपकारकमेवेति तत्रापि वेदिः स्यात्। अथ वाऽस्तु प्रधानस्य ग्राहकत्वं द्वारं तु न तदर्थमेव हवि किं तु तदुपकारिहविर्मात्र वाक्यसङ्कोचपरिहारात्, सम्भवति चोपकारिमात्रस्यापि द्वारत्वम्, अत प्रधानप्रयुक्तानामपि वेदिबर्हिस्तद्धर्माणां प्रयाजाद्यपूर्वस्वरूपनिर्वृत्तिद्वारेण तादर्थ्यं प्रयाजादीनामिव भविष्यतीति सिद्धं प्रधानाद्यङ्गत्वं वेद्यादेः॥

स्वामिसंस्काराणां प्रधानार्थताऽधिकरणम्। सू० फलसंयोगात्तु स्वामिसंयुक्तं प्रधानस्य ॥ २ ॥

ज्योतिष्टोमे केशश्मश्रुवपनादयो यजमानसंस्काराः किमङ्गप्रधानार्था? उत प्रधानार्था? एवेति संशय, तदर्थं च किमेते कर्तृत्वांशपातिनः? किं भोक्तृत्वांशपातिन? इति तत्र भोक्तृत्वस्य प्रधानफलत्वात्तदर्थाः सन्तः संस्काराः प्रधानतुल्यकक्षतया न प्रधानार्था भवेयुः तादर्थ्य

१ न तु ग्राहकतया वाक्यस्येति पा०।

च प्रकरणादवगतमतः कर्चयोः, क्रतौ चाङ्गप्रधानार्थैः संस्कारा अपि तद्गता अङ्गप्रधानशेषाः स्युरिति प्राप्तेऽभिधीयते "भोक्तृत्वस्य प्रधानत्वाददृष्टत्वाच्च तद्गुणाः । संस्काराः कर्तृभावस्तु गुणो दृष्टश्च सोऽन्यतः । प्रधानं हि भोक्तृत्वं गुणभूतं कर्तृत्वं भोक्तृत्वार्थत्वात्, संस्काराश्च गुणभूतास्ते प्रधानार्था एव युक्ताः, न गुणार्थाः, "गुणानां च परार्थत्वा"दिति न्यायात् अदृष्टं च भोक्तृत्वं शास्त्रगम्यमुपायमपेक्षते, कर्तृभावस्तु विनाऽपि संस्कारैरुत्पद्यमानः प्रमाणान्तरादेव दृष्ट इति न तादर्थ्यमेषां, न च भोक्तृत्वार्थानां प्रधानाङ्गत्वविरोधः, न हि ते फलं जनयन्ति यतः प्रधानतुल्याः स्युः किं तु तादृशं संस्कारं यजमाने कुर्वन्ति येन यजमाने प्रधानं स्वफलं जनयितुमलं तेन क्षेत्रसंस्काराणामिव बीजावपनार्थत्वं प्रधानार्थत्वं संस्काराणां, प्रधानफलं हि यजमानो भुङ्क्ते नाङ्गफलं तस्य क्रत्वर्थत्वात् ॥

सौमिकवेद्यादीनामङ्गप्रधानोभयार्थताऽधिकरणम् ।

## सू० चिकीर्षया च संयोगात् ॥ ३ ॥

सौमिकी वेदिः किं प्रधानार्था? उताङ्गार्थाऽपीति चिन्ता तत्रेयमतिशय्या[1]महेऽस्यां कर्तुमिति तुमुना चिकीर्षितार्थता गम्यते प्रधानं च फलवत्त्वाच्चिकीर्षितं नाङ्गानि, तस्मात्प्रधानार्था वेदिः स्थितं तावदपर्यवसितम् ॥

अभिमर्शनस्याङ्गप्रधानोभयाङ्गताधिकरणम् ।

## सू० तथा[2]प्रधानेन ॥ ४ ॥

संयोगादित्यनुवर्तते तल्लिप्सयाऽनन्तरोपक्रमः दर्शपूर्णमासयोर्वेदिरभिमर्शनार्थौ मन्त्रौ "वसुहोत्रापौर्णमासीमभिमृशेत्यष्टहोत्रामावास्या"मिति किं तावदङ्गप्रधानार्थावुत प्रधानार्थौ? इति पौर्णमास्यमावास्या-शब्दयोः प्रधानवचनत्वात्प्रधानार्थत्वं स्थितादुत्तरं सत्यं, चिकीर्षितार्थो वेदिः साङ्गं चिकीर्षितं तद्धि फलाय पुष्कलं न करणमात्रम्, अतोऽङ्गप्रधानार्था वेदिरित्यग्नीषोमीयविकारे निरूढपशौ प्रवर्तते नन्ववेदिमतामियमग्नीषोमीयस्य तु प्राकृती वेदिरन्येवेति न तदङ्गमियं, नैव वचनवनात्स्वशेषार्थत्वापत्तेः प्राकृतीः न प्रयोक्ष्यते द्वितीयस्योत्तरं पौर्णमा-

---

१ शय्यामहे इति पा० ।

२ तथाऽप्रधानेनेत्यपि पुस्तकान्तरे सूत्रपाठः ।

मावास्या-शब्दौ कर्मवचनौ, न च कर्मणोऽभिमर्शनं सम्भवति तस्माद् द्वितीयैव सप्तम्यर्थे व्याख्यातव्या पौर्णमासीप्रयोगे चतुर्होत्रामभिमृशेदमावास्याप्रयोगे पञ्चहोत्रेति हविर्मात्राभिमर्शनं वाक्यान्तरप्राप्तमासन्नानि हवींष्यभिमृशेदिति तस्मादङ्गप्रधानार्थौ मन्त्रौ ॥

दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ।

सू॰ दीक्षदक्षिणं तु वचनात्प्रधानस्य ॥ ५ ॥

ज्योतिष्टोमे दीक्षादण्डेन दीक्षयतीत्यादि दक्षिणा तस्य द्वादशशतं दक्षिणेति तद्दीक्षादक्षिणमङ्गप्रधानार्थं॰ उत प्रधानार्थमेवे॰ति तत्र दीक्षाणां यजमानसंस्कारत्वात्प्रधानार्थत्वे सिद्धेऽप्यग्नीषोमीयादौ दीक्षितविनियोगादङ्गप्रधानार्थत्वशङ्का, दक्षिणा तु प्रयोगाङ्गत्वादङ्गप्रधानार्थैव दीक्षा सोमस्य दक्षिणा सोमस्येति वचनं परम्परयाऽप्युपपत्तेर्नाङ्गार्थतां विरुणद्धीति प्राप्ते ब्रूमः, वचनात्प्रधानार्थत्वम्, अन्यथा हि वचनं न्यायप्राप्तानुवादमात्रमनर्थकं स्यात्, न च साक्षादपेक्षिताङ्गाङ्गिभावपरत्वेऽर्थवत्त्वे च सम्भवति परम्पराश्रयणमानर्थक्यं च युक्तं तस्मात्प्रधानार्थत्वम् ॥

अन्तर्वेदियूपानङ्गताधिकरणम् ।

सू॰ तथा यूपस्य वेदिः ॥ ६ ॥

यूपे श्रूयते अर्धमन्तर्वेदि मिनोत्यर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति तत्र चिन्ता किमन्तर्वेद्येकदेशो यूपाङ्गत्वेन चोद्यते? उत बहिर्वेदि सहितो यूपस्य मानदेशं लक्षयति? तत्र लक्षणाया अन्याय्यत्वाद्वेद्येकदेशस्य श्रुतस्य यूपाङ्गाङ्गत्वेन विधेरर्धं च मीयमानेऽर्धान्तरं बहिरेव भवतीत्यर्थाद्बहिर्वेदीत्यनुवादः स्यात् स्यादेव यद्यर्धमेवान्तर्वेदीति वाक्यार्थः स्यात्, न त्वेवं परिसंख्यादोषात् किं त्वर्धं तावदन्तर्वेदि मातव्यमिति, ततश्चार्धान्तरं न विहितं प्रतिषिद्धं त्स्यादन्तर्वेद्येव मानं स्यात् तत्रार्धं बहिर्वेदीत्यपि विधातव्यं तत्र वाक्यभेदः प्राप्तिकानुवादत्वे नित्यवच्छ्रवणविरोधः । नन्वर्धमिति विशेषणादर्धान्तरव्यावृत्तिः स्यात् सत्यं, विधितो व्यावृत्तिर्यत्र हि विशेषणं श्रुतं तत एवान्यव्यावृत्तिर्भवति वेदिमानविधेस्त्वर्धं विशेषणमिति विधानादेवार्धान्तरं व्यावर्तते इच्छातस्तु वेद्यामेव मानमर्धान्त

रस्य को वारयेत् तस्मादहुं वहिर्वेदीत्यपि विधातव्यमिति वाक्यभेदः स्यात् उपलक्षितदेशे विधाने त्वेकार्थविधानादवाक्यभेदः, तदयमर्थः—यत्र मीयमानस्य यूपस्यार्धमन्तर्वेदि भवत्यर्धं च बहिर्वेदि तत्र मिनुयादिति लौकिक एव देशविशेषो विधीयते न संस्कृतो वेदिदेशः ॥

हविर्धानस्य सामिधेन्यनङ्गताधिकरणम् । सू० सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥ ७ ॥

एतयस्त्वन्ति सामिधेनीस्तदन्वाहुरिति यस्मिन्हविर्धाने भिय वस्तत्र स्थित्वा सामिधेनीरनुब्रूयादित्यर्थः तत्र संशयः किं हविर्धानं सामिधेन्यङ्ग? मुत तल्लक्षितो देश - इति तत्र पूर्ववद् वाक्यभेदाभावाल्लक्षणापरिहाराय हविर्धानमेवाङ्गमिति प्राप्तं तदुच्यते हविर्धानस्य हविर्धारणार्थत्वात प्रयोजनान्तरापेक्षा प्रकृतिरचाद्धवनीयवत्यत्र्देशः सामिधेन्यङ्गत्वेन प्राप्त , स च दक्षिणस्योत्तरस्य वा हविर्धानस्य समीपे भवति, तत्र नियममात्रं लाघवाद्विधेयं, हविर्धानस्य तु अत्यन्ताप्राप्तमङ्गत्वमनपेक्षितं च न युक्तं विधातुं तदिहापि देशलक्षणा ॥

अङ्गानामन्यद्वारानुष्ठानाधिकरणम् । सू० शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात्स्वयं प्रयोगे स्यात् ॥ ८ ॥

प्रासङ्गिकी कथा वृत्ता समाप्त्यायास्त्वतः परं विविचारयिषु. पूर्वैर्विरुद्धत्वादिरुद्धते तदुपोद्घातरूपेण ज्योतिष्टोमादिकर्मसु नानाकर्तृसमावेशं वक्तुमारभते ऽधुना दर्शपूर्णमासे ज्योतिष्टोमादिकर्तृफलदक्षिणायुक्तं कर्म किं सर्वं यजमानेनैव कर्तव्य? मुत द्रव्योत्सर्गमात्रे हविस्त्यागदक्षिणादानादिके यजमाननियमोऽ यत्रानियमोयजमानोऽन्योवाऽथ वोत्सर्ग एव यजमानोऽन्यत्रान्य एवेति विचारः, तत्र स्वर्गकामो यजेतेति सामानाधिकरण्येनात्मनेपदेन च कर्तुरेव फलावगमादर्थोत्सर्गं कुर्यात् दक्षिणादानं तु धर्मेभ्यः । ननु प्रधानस्येव सामानाधिकरण्यात्मनेपदाभ्यां फलार्थिकर्तृकत्वं नाङ्गानां तत्र भावनाया एव हि प्रत्ययवाच्यायास्ताभ्यां तत्कर्तृकत्व, सा च व्यर्थेत्यङ्गानामपि स एव कर्ता, उच्यते सत्यमर्थेन साङ्गे कर्तृत्वं तस्य

प्रयोजकत्वेनापि सम्भवति 'तत्प्रयोजको हेतुश्च' इति स्मरणात् षड्भिर्हलैः कृष-
तीति च प्रयोगात् तत्रासति परम्पराप्रमाणे साक्षादेव कर्तृत्वं स्यात्, अस्ति
तु प्रमाणं परिक्रयवचनं तच्च कर्त्रन्तरसद्भावे दृष्टार्थं भवति सर्वत्र च स्वय-
मशक्तोऽन्येन कार्यं कारयति यजमानोऽपि शक्तः स्वयं कुर्यात् अशक्तस्त्व-
न्येन कारयेत् परिक्रयश्चान्यपक्षे भविष्यति दृष्टोत्सर्गस्त्वन्यथा शक्यत्वात्
स्वयमेव कुर्यादिति प्राप्ते ब्रूमः सम्भवति प्रयोजकत्वेनापि कर्तृत्वे परिक्र-
यस्य नित्यवदाम्नातस्य पाक्षिकत्वायोगान्नित्यमुपमहतुमुत्सर्गादन्यत्रान्यैरेव
कारयितव्यम् ॥

परिक्रीतानामृत्विजां स-
ख्याविशेषनियमाधिकरणम् ।

सू० तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥ ९ ॥

उत्सर्गादन्यत्रान्य इत्युक्तं तत्र कति तेऽन्ये इति सन्देहे विशेषाभा-
वादनियमः सर्वथा परिक्रयसिद्धेः, अथवा यजमानस्यैव कर्तृत्वे प्राप्ते परि-
क्रयवशादन्योपादानं, स चैकेनापि सिध्यतीत्येक एवान्यः स्यात्, अध्वर्य्वादि
सञ्ज्ञास्तु कर्मनिमित्ता अध्वरं युनक्तीत्यध्वर्युः, आवाहयतीति होता, तथा-
न्येऽपि, तथा च दर्शयति "य एवामुमावहामुमावहेत्यावाहयति स एव होतुः
होतृत्व मिति ततश्चैकस्यापि तत्तत्कर्म कुर्वतः पाव[1]कलानकद्रुत्य[2]वा ना-
नासञ्ज्ञा, तस्मादेकः स्यात्, स्यादेव यदि प्रवृत्तिसमये तदुत्तरकालं वैता सञ्ज्ञा
श्रूयेरन् वरणं त्ववृत्ताध्ययनेन तत्रैता श्रूयन्ते 'स ब्रह्माणं वृणीते' इत्यादि
न च तदा कर्मनिमित्तत्वं सम्भवतीति वरणनिमित्तत्वं, भिद्यन्ते च वरणा-
'न्येकस्यैव पुनः श्रुति'रिति न्यायात् न चैकस्मिन्पुरुषे बहूनि वरणानि सम-
वयन्ति दृष्टार्थत्वात्, न हि वृतस्य वरणं दृष्टार्थं, तेन वरणानां तन्निमि-
त्तानां च सञ्ज्ञानामसङ्कीर्णविषयत्वाद्यावद्वरणं यावत्सञ्ज्ञं च कर्तृभेदः कर्मा-
णाम्, अतस्तावत्सङ्ख्यैः कर्तृभिर्ज्योतिष्टोमस्य निर्वृत्तिः । किं पुनरिदं वरणम्?
उक्तं प्रार्थनमिति, तत्र महर्त्विजां होत्रकाणां च मन्त्रेण अग्निर्होताऽसौ
मानुष" इत्यादिना, अन्येषां तु लौकिक्या वाचा प्रतिप्रस्थाता मे भवानस्त्व-

(१) पावकेति पा ।
(२) उपपचेति तु पुस्त पाठ॰ ।

त्यादि, किमेतावता होत्रादित्वं भवति? को दोषः? न ह्येताः सञ्ज्ञाः प्राग्दृ
श्यन्ते वरणोत्तरकालं च य एव वृतः स्वयं चेदमाहमानीति मनसा सङ्कल्पयति,
तत्र होत्रादिसञ्ज्ञा प्रसिद्धवद्वृद्धे याज्ञिकप्रयोगे च व्यवह्रियमाणा दृष्टा,
तस्माद्य एव वृतः य एव च सङ्कल्पयति स एव होत्रादिसमाख्यां लभते, सत्रेषु
तु दृष्टार्थत्वाद्वरणस्यार्थलोपान्निवृत्तिः तदभावे चाध्वर्युरेहयति दीक्ष
यित्वेत्यादिव्यवहारदर्शनात्सङ्कल्पादेव होत्रादित्वसिद्धिः प्रकृतावपि हि
सङ्कल्पो निमित्तमेव यो हि व्रियमाणो नेच्छति न स होतेत्युच्यते तस्मात्प्र-
कृतौ वरणाभिधानात्तन्मिश्रः सङ्कल्पो निमित्तं सत्रेषु तु सङ्कल्पमात्र
प्रयोगदर्शनात् न चैवं वैरूप्यादशोभनमिति मन्तव्यं प्रमाणवत्त्वादीदृशस्यैव
शोभनत्वात् न हि सत्रे होत्रादिशब्दानां गौणत्वे किञ्चित्प्रमाण
मस्ति । यथाप्यत्यन्तमैकरूप्येण कार्यं तत्र सङ्कल्प एव निमित्तं य एव
क्रतूपक्रमे तदौपयिकं होत्रादिभावमात्मनः सङ्कल्पयति स एव होत्रादि
शब्दैरुच्यते तथा च वक्ष्यति 'सत्रे तु स्वयं कर्तृत्वाद्वरणभरणयोरनपेक्षित
योरग्रहणाद्विनैव ताभ्यामवैगुण्य'मिति योग्यतामात्रेणाध्वर्य्वादिसिद्धि
रिति, । नन्वदृष्टमध्वर्युत्वादिकं कथमविहितेन सङ्कल्पेन जायते? विहितमेव
तु वरणं तस्य जनकं युक्तं यच्चादृष्टमध्वर्युत्वादिकं तदर्थं वरणं तत्र सत्रेऽपि
तदनुपाख्यावरणवत् कर्तव्यमिति सुतरां तत्राध्वर्य्वादित्वसिद्धिः । न चा
दृष्टाध्वर्युत्वादिसद्भावे प्रमाणमस्ति वरणविधिर्हि दृष्टार्थतयोपपत्तेर्ना
दृष्टकल्पनायालं, यदि चादृष्टमिदं विहितोपायसाध्यं च ततो दर्शपूर्ण
मासयोर्होता वृतः सामिधेनीरन्वाहेति वचनात् प्रागेव वरणात्सामिधेनीषु
प्रवृत्त[1]स्य प्रसिद्धहोतृभावस्य पश्चाददृष्टार्थं वरणं न होतृत्वोपयोगीति हो
तृत्वं न स्यात्, तस्मादध्यवसायादेव होतृत्वमङ्गीकर्तव्यमिति सत्रेऽपि होत्रा
दित्वसिद्धिः । ननु होतृ-शब्दवाच्यः स्यामित्यध्यवसायादेव तद्वाच्यो भवती
त्येतदलौकिकमेव तच्छब्दवाच्यो भवति प्रार्थनादेव तच्छब्दवाच्यो भवती
त्येतद्वा किं लौकिकं तत्सिद्धं सञ्ज्ञया कर्तॄणां भेदः । माभूत्सञ्ज्ञाया वरणानां
तु बहूनां युगपत्प्रयोगवचनपरिगृहीतानां दृष्टार्थत्वेनैकपुरुषासमवायाद्वा-
बहुत्वं वरीतव्याः कर्तारो भिद्यन्ते ॥

१ प्रसिद्धस्येति पा ।

चमसाध्वर्यूणां पृथक्त्वाधिकरणम्।

सू० चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ १० ॥

ज्योतिष्टोमे पूर्वाधिकरणे ये इह कर्तारः सिद्धाः सन्ति चमसाध्वर्यवो नाम ते किं तेषामेवान्यतमाः? उत तेभ्योऽन्ये? इति यौगिकत्वात्सन्नायाध्वर्युपुरुषा एव चमसाध्वर्यव इति प्राप्ते ब्रूमः, "संज्ञानामस्तु योगेन वरणं तु पृथक् श्रुतम्। तत्तेष्वसम्भवात्तेषां तेभ्यो भेदं करिष्यति" एतेन सदस्यो व्याख्यातः, तस्यापि वरणसमाम्नानात् ॥

चमसाध्वर्यूणां बहुत्वनियमाधिकरणम्।

सू० उत्पत्तौ तु बहुश्रुतेः ॥ ११ ॥

तेषु सन्देहः किं चमसाध्वर्यव इति बहुवचनस्य संस्कार्यगतत्वेनाविवक्षितत्वादनियमः—एको द्वौ बहवो वा, उच्यते वरणाङ्गतया संस्कार्यविवक्षितं बहुत्वं क्रत्वङ्गतया तु तेषामुपादेयत्वाद्विवक्षितमेव बहुत्वं, न ह्यत्र[1] सिद्धक्रतुसम्बन्धानुद्दिश्य वरणमात्रं ग्रहसम्मार्गवद्विधीयते, किं त्वनेनैव वचनेन प्रकरणसहायेन वरणसंस्कारयुक्ताश्चमसाध्वर्यवः क्रतुं प्रति विधीयन्ते, वरणेन चमसाध्वर्यूनाम कर्तॄन् क्रत्वङ्गत्वेनोत्पादयतीति तस्मादुपादेयत्वात्तेषां कर्माङ्गतया विवक्षितं बहुत्वं, यथा च स्वाध्यायोऽध्येतव्य इत्यध्ययनसंस्कार्यस्यापि स्वाध्यायस्यार्थावबोधं प्रत्युपादेयत्वाद्विवक्षिता सङ्ख्येति शाखान्तराधिकरणे दर्शितम्। एतेन 'पुरोहितं वृणीत' इत्यत्राप्येकत्वविवक्षा व्याख्याता। तथाऽध्वर्युं वृणीत इत्यादावेकत्वमध्वर्युं कार्यार्थं वृत सर्वमाध्वर्यवमेकेन कर्तव्यमध्वर्युणा न कर्तव्यमित्यवगते तदा पत्नीन्यायेन मिथोनियमं पश्वेकत्ववदेव, तथा होत्रादिकमपि, होत्राध्वर्य्वोस्तु मिथोभिन्नकर्तृत्वमङ्ग समाख्याभेदात् ॥

चमसाध्वर्यूणां दशसंख्यानियमाधिकरणम्।

सू० दशत्वं लिङ्गदर्शनात् ॥ १२ ॥

स्थिते बहुत्वे कियन्तो बहवः इत्यनियमे त्रित्वे वा प्राप्ते चमसदशत्वात्तद्गणाभिस्तावद्भिर्भवितव्यम् बाधिकस्य प्रमाणाभावाद्दशैव ॥

---

(१) न ह्यत्रेति पा।

सवनानामेवार्त्विज्यमिति सिद्धम् ॥ मध्ये तन्त्रं यस्य येषां विधानं तेषु प्रोक्तो मुख्यतन्त्रसङ्गः । जिज्ञास्यो योधर्म उक्तश्चतुर्द्धा स प्रज्ञातो लक्षणैर्द्वादशान्तैः ॥

इत्युपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां द्वादशाध्यायस्य चतुर्थः पादः, द्वादशाध्यायः शास्त्रदीपिकाग्रन्थश्च समाप्तः ॥

---

मीमांसाशास्त्रस्य तूपासनकाण्डरूपा ज्ञानस्वरूपमध्यायचतुष्टयमवशिष्यते, यथोक्तमाचार्यपादैः श्रीभाष्ये 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेने'ति । तदपि यथासमयं प्रकाशयिष्यामः इति, सर्वममुं श्रमं भगवत्यर्पयति,

राममिश्रशास्त्री ॥

